।।श्रीः।।

# रूपच्छन्दोवलिः


रचयिता

**शैलेश कुमार तिवारी**

व्याकरणाचार्य, लब्धस्वर्णपदक एवं

अनुसन्धाता

व्याकरणविभाग

काशीहिन्दूविश्वविद्यालय, वाराणसी-५






**सार्वभौमसंस्कृतप्रचारसंस्थानम्**

वाराणसी-१

संवत् २०६१ ८ मार्च २००५

।।श्रीः।।

# रूपच्छन्दोवलिः

रचयिता


शैलेश कुमार तिवारी

व्याकरणाचार्य, लब्धस्वर्णपदक* एवं

अनुसन्धाता

व्याकरणविभाग

काशीहिन्दूविश्वविद्यालय, वाराणसी-५






सार्वभौमसंस्कृतप्रचारसंस्थानम्

वाराणसी-१

संवत् २०६१ ८ मार्च २००५

प्रकाशकम्- सार्वभौमसंस्कृतप्रचारसंस्थानम्
डी ३८/११०, हौजकटोरा, वाराणसी-१

संस्करणम्- प्रथमम्



संख्या- ५००

मूल्यम्- ४०/-

अक्षरसंयोजनम्- आयुषी कम्प्यूटर्स
इन्दिरानगरं, वाराणसी

मुद्रकम्- इन्द्राप्रकाशनम्
वाराणसी

# किञ्चिन्निवेदनम्

भगवतो विश्वनाथस्यानुकम्पया "रूपच्छन्दोवलि" नाम्नी कृतिरेषा प्रकाशं गच्छति इति महान् प्रमोदो जायते। यदाऽहम् उत्तरमध्यमाख्य-कक्षायां पठामि स्म, तदानीमेव गुरुभ्य: कांश्चिच्छन्दोनियमानवगम्य भगवत्या आदिशक्तिजगदम्बाया एकमष्टकमरचयम्। ततस्तेषामेव प्रेरणया "रामो राजमणि: सदा विजयते" इतिवत् कांश्चिच्छब्दान् सिद्धान्तकौमुदीस्थानाश्रित्य कांश्चिच्छ्लोकानरचयम्। पुनस्तेषामेवाज्ञया मातृभाषानुवादमपि व्यदधाम्। इदानीं त एव श्लोका यथावत् प्रकाश्यन्ते। नाहं कविर्न वा विद्वान् वर्ते अपितु बालोऽस्मि। तत्रापि शब्दानां सर्वासु विभक्तिषु क्रमश: प्रयोगो भवेद् इति कार्यं मम कृते कठिनमेवासीत्। तथापि तत्र भवतां विद्वच्चरणानामाशिषैष प्रयासो याति साफल्यम्। अथ च येषां प्रेरणया कार्यमेतत् सम्पन्नं, ये च स्वयमाशीर्वादपत्रमपि विलिख्य मदीयोत्साहसंवर्द्धनपूर्वकम् आशीर्वादम्मे प्राददु:, तेऽस्मद्गुरुचरणा: सुरभारतीप्रचारप्रसाराय समर्पितजीवना अद्वितीयव्यक्तित्वविलसिता मधुरव्यवहारा: पण्डितप्रवरश्रीवासुदेवद्विवेदि-शास्त्रिमहोदया मनसा भूयोभूय: प्रणम्यन्ते संस्मर्यन्ते च। इदानीं ते पार्थिवशरीरेण न सन्तीति महादु:खमनुभूयतेऽस्माभि:। एतत्-पुस्तकप्रकाशनादिव्यवस्था सर्वाऽपि सम्पादिता किन्तु अस्मद्दुर्भाग्यवशात् प्रकाशनात्पूर्वमेव दिवंगता। प्रकाशनेऽपि महान् विलम्बो जात:। अस्तु, तेषामाशीर्वादो वर्ततेऽस्मासु। किञ्च विश्वविख्याता विद्वांसो राज्यसभासदस्या ऋषिकल्पा: पद्मभूषणोपाधिविभूषिता: प्रो. विद्यानिवासमिश्रमहोदया: सपत्रमाशीर्वादं प्रदाय प्रोदसाहयन् माम् इति न सन्ति शब्दा मम पार्श्वे तान् प्रति किमपि वक्तुम्, अपि चास्य "रूपछन्दोवलि:" इति नामकरणमपि तैरेव कृतम्, अत: सश्रद्धं हार्दिकीं च प्रणतिं विनिवेदयामि। अस्य प्रकाशने श्रीगुरुचरणानां डॉ.जगदीशचतुर्वेद- महोदयानां महान् सहयोगो वर्तते, अतस्तेभ्यो मनसा नमनं विदधामि। ये च कृतसहयोगा मेऽनुजा: परमेश-उमेशदुर्गेशादय:, तेभ्योऽपि मंगलं कामये। सहैव प्रत्यक्षरूपेण परोक्षरूपेण वा येऽपि सहयोगिन:, ये च अस्माकं गुरवो गुरुकल्पा विद्वांस: अभिभावकाश्च, तेभ्यस्सर्वेभ्योऽपि भूयसीं प्रणतिं निवेदयामि।

सम्भाव्यन्तेऽत्रानेके दोषा, यतोहि न मयि कवित्वं न वा किमपि वैदुष्यादिकं वर्तते। अत: स्वीयबालं मां मत्वा तत्रभवन्त: क्षाम्यन्तु निजाशीर्वादञ्च प्रदायानुगृह्णन्त्विति प्रार्थयेऽहम्-

महाशिवरात्रि: — विदुषामाशिषामभिलाषी

सं. २०६१ (८.३.२००५), वाराणसी — शैलेश कुमार तिवारी

# सार्वभौमसंस्कृतप्रचारसंस्थानसंस्थापकसञ्चालकानां परमपूज्यगुरुवरश्रीवासुदेवद्विवेदिशास्त्रिमहोदयानाम् आशीर्वचनम्

श्री शैलेश कुमार तिवारी बहुमुखीप्रतिभाशाली, विनयशील एवं मेरे अत्यन्त प्रिय छात्र हैं। जब मेरे संस्थान में ये आये, उस समय उत्तरमध्यमा प्रथमखण्ड के छात्र थे। सस्वरश्लोक एवं गीत प्राय: प्रतिदिन रात्रि में भोजन के बाद मुझे सुनाया करते थे। एक दिन श्लोकवाचन प्रसंग में ही कुछ छन्दों को मैंने समझाया। उसके तीसरे-चौथे दिन इन्होंने देवी का एक अष्टक लिखकर मुझे दिखाया। उसे देखकर मुझे बड़ी प्रसन्नता हुई साथ ही इनकी प्रतिभा पर आश्चर्य भी हुआ। फिर मैंने इनसे कहा कि "रामो राजमणि: सदा विजयते" इस श्लोक में जैसे रामशब्द का सभी विभक्तियों में प्रयोग हुआ है, उसी प्रकार सिद्धान्तकौमदी के अन्य शब्दों को लेकर श्लोकनिर्माण करो, हम छपवायेंगे उसे और प्रोत्साहन के लिए निम्नश्लोक लिखकर एक डायरी इन्हें दी-

इयं ललितपद्यानां गीतानां संग्रहाय च।
मया दैनन्दिनी दत्ता श्रीशैलेशत्रिपाठिने।।

देखते ही देखते कुछ ही दिनों में इस कार्य को इन्होंने कर दिया। तब हमने उसी क्रम से हिन्दी अनुवाद के लिए प्रेरित किया। उसे भी इन्होंने कर दिया। आज इनकी प्रथम रचना प्रकाशित होने जा रही है। व्याकरण, साहित्य, न्याय, संगीत, कर्मकाण्ड, ज्योतिष, काव्यनिर्माण, लेखन, चित्रकला, मूर्तिकला, भाषण आदि अनेक विषयों में इनकी समान गति है। इनकी प्रतिभा, व्यवहारकुशलता और परिश्रम देखकर बड़ी प्रसन्नता होती है। मुझे पूर्ण विश्वास है कि ईश्वर की अनुकम्पा एवं आप विद्वज्जनों के आशीर्वाद से संस्कृतभाषा के प्रचार-प्रसार एवं शास्त्रों के पठन-पाठन में हमेशा तत्पर रहेंगे और सर्वोत्कर्ष को प्राप्त करेंगे। मैं इनके यशस्वी एवं तेजस्वी जीवन की कामना करता हूँ।

वि.सं. २०६१
रामनवमी

वासुदेव द्विवेदी शास्त्री
सार्वभौमसंस्कृतप्रचारसंस्थानम्, वाराणसी

# विश्वविख्यात भाषाविद्, साहित्यकार, राज्यसभासदस्य एवं पद्मभूषण महामनीषी प्रो. विद्यानिवासमिश्र जी के आशीर्वचन

विद्यानिवास मिश्र
सांसद (राज्यसभा)



Vidya Nivas Misra
Member of Parliament (R.S.)

॥श्री:॥ कार्तिक कृ. १२/२०६१ वि.

श्री शैलेश कुमार तिवारी ने **रूपछन्दोवलिः** नाम से रूपावली को छन्दोबद्ध किया है। छन्द मनोरम हैं। इसलिए छन्द याद हो जायें तो केवल रूप ही न याद हो, विभिन्न कारकों के प्रयोग की याद आ जाय। यह संस्कृत पढ़ने वाले बालक-बालिकाओं के समूह के लिए बड़ा उपयोगी और आकर्षक है।

मैं इस सुन्दर प्रयास के लिए इन्हें साधुवाद और आशीर्वाद देता हूँ।

विद्यानिवास मिश्र

# विषयसूची





## ।।अथ मङ्गलाचरणम्।।

विघ्नेशं गिरिराजजास्वतनुजं शक्तिं श्रियं शारदाम्,
विश्वेशं जगतः पतिं समगुरुं नारायणं सर्वदम्।
पाणिन्यादिमुनीन् बुधान् गुरुवरान् सर्वग्रहान् निर्जरान्,
अन्याँश्चापि समान् सुपूज्यचरणान् नत्वा सदा सादरम्।।१।।

गिरिराजपुत्री के पुत्र श्री गणेश, शक्ति (महाकाली), श्री (महालक्ष्मी); शारदा (महासरस्वती), सब के गुरु एवं जगत्पति विश्वेश, सब कुछ प्रदान करने वाले नारायण, पाणिनि आदि मुनियों, विद्वानों, गुरुजनों, सभी ग्रहों एवं देवताओं को तथा और सभी पूज्य जनों को सादर नमन करके-

शब्दानाश्रयताऽत्र काँश्चन मया पद्यं नवं रच्यते,
अल्पज्ञश्च कवित्वशक्तिरहितः शास्त्रं न जानाम्यहो।
मूढो मन्दमतिस्तथापि कृपया विश्वेश्वरस्य प्रभोः,
बालोऽहं प्रयते यथामति बुधैः क्षम्या मदीया त्रुटिः।।२।।

कुछ शब्दों को लेकर नूतन पद्यों की रचना मेरे द्वारा की जा रही है। मैं यद्यपि अल्पज्ञ, कवित्वशक्ति से रहित हूँ, शास्त्र भी नहीं जानता हूँ, मूढ एवं मन्दमति हूँ, फिर भी भगवान् विश्वनाथ जी की कृपा से मैं बालक अपनी बुद्धि के अनुसार प्रयत्न कर रहा हूँ। विद्वज्जन मेरी त्रुटि को क्षमा करेंगे।

।।ॐ।।

# अजन्तपुँल्लिङ्गप्रकरणम्

## ''अ'' श्यामः (श्याम)

श्यामः खेलति सुन्दरश्च शुभदः श्यामं भजन्ते जनाः,
श्यामेनैव हि तार्य्यते शरणगः श्यामाय तस्मै नमः।
श्यामान्नास्ति परं च वस्तु जगति श्यामस्य भक्ताः समे,
श्यामे सन्तु रताः सदा सुमनसा त्वं श्याम मामुद्धर।।३।।

प्रथमा- श्यामः खेलति सुन्दरश्च शुभदः-
सुन्दर और सभी शुभों को देने वाला श्याम खेल रहा है।

द्वितीया- श्यामं भजन्ते जनाः-
श्याम को सभी लोग भजते हैं।

तृतीया- श्यामेनैव हि तार्य्यते शरणगः-
श्याम के द्वारा ही शरणार्थी तारे जाते हैं।

चतुर्थी- श्यामाय तस्मै नमः-
उस श्याम को नमस्कार है।

पञ्चमी- श्यामान्नास्ति परं च वस्तु जगति।
श्याम से अतिरिक्त संसार में कोई वस्तु नहीं है।

षष्ठी- श्यामस्य भक्ताः समे'
श्याम के सभी भक्त गण!

सप्तमी- श्यामे सन्तु रताः सदा सुमनसा-
प्रसन्न मन से (आप सब) श्याम में रत हो जावें।

सम्बो.- त्वं श्याम! माम् उद्धर-
हे श्याम! तुम मेरा उद्धार करो।

# निर्जर - शब्दः (देव)

स्वर्गे राजति निर्जरोऽर्चितपदो ना नौति तं निर्जरम्,
तुष्टा निर्जरसा च निर्जरस एवेर्ष्यन्ति सुप्तेऽपि न।
अन्ये निर्जरसोऽत्र निर्जरस एवांशाः समे सन्ति ते,
स्नेहं निर्जरसि प्रजा प्रकुरुते छिन्द्याःजरां निर्जर।।४।।

प्रथमा- स्वर्गे राजति निर्जरोऽर्चितपदः-
पूजित निर्जर स्वर्ग में राज करते हैं।

द्वितीया- ना नौति तं निर्जरम्-
मनुष्य उस निर्जर को नमन करता है।

तृतीया- तुष्टा निर्जरसा च-
निर्जर से सन्तुष्ट लोग-

चतुर्थी- निर्जरस एवेर्ष्यन्ति सुप्तेऽपि न-
निर्जर से ही स्वप्न में भी ईर्ष्या नहीं करते।

पञ्चमी- अन्ये निर्जरसोऽत्र-
जो यहाँ निर्जर से अतिरिक्त हैं,

षष्ठी- निर्जरस एवांशाः समे सन्ति ते-
निर्जर के ही वे सब अंश हैं।

सप्तमी- स्नेहं निर्जरसि प्रजा प्रकुरुते-
प्रजा (जनता) निर्जर से स्नेह करती है।

सम्बो.- छिन्द्याः जरां निर्जर-
हे निर्जर! जरा (बुढ़ापा) का नाश करो।

## "आ" गोपाः (ग्वाला)

गोपा वक्ति च सादरं सुवचनं गोपां यदा, मोहनो
गोपाऽस्यां भुवि खेलितः सह तदा गोपे तु सर्वप्रदः।
गोपस्त्वेव पृथग्गतः कथमहो विस्मृत्य गोपो दशां,
दोषो गोपि च कोऽपि चेद् भवति तं गोपा द्रुतं ज्ञापय।।५।।

प्रथमा- गोपाः वक्ति च सादरं सुवचनं-
गोप आदर पूर्वक अपने वचन को कहता है,

द्वितीया- गोपां, यदा मोहनः-
गोप से, जब मोहन ने

तृतीया- गोपा अस्यां भुवि खेलितः सह तदा-
इस भू पर गोप के साथ क्रीडा की, तब

चतुर्थी- गोपे तु सर्वप्रदः-
गोप के लिए सर्वप्रद था।

पञ्चमी- गोपः तु एव पृथग् गतः कथमहो-
अब गोप से ही पृथक् क्यों चला गया,

षष्ठी- विस्मृत्य गोपः दशाम्-
गोप की दशा को भूला कर।

सप्तमी- दोषः गोपि च कः अपि चेद् भवति,-
यदि कोई दोष गोप में होता है तो

सम्बो.- तं गोपाः! द्रुतं ज्ञापय-
उसको हे गोप! जल्दी बताओ।

# "इ" सूरिः (विद्वान्)

सूरिस्त्वस्ति गुणप्रदश्च सततं सेवेत सूरिं सदा,
रक्ष्यन्तेऽत्र हि सूरिणा समगुणा नित्यं नमः सूरये।
सूरेः सम्पठतां गुणान् सुपथदान् सूरेः समीपे वसेत्,
सूरौ सन्त्यमला गुणाः सुपथदाः सूरे जनान् शिक्षय।।६।।

प्रथमा- सूरिस्त्वस्ति गुणप्रदश्च सततम्-
विद्वान् हमेशा गुणों को देने वाला होता है।

द्वितीया- सेवेत सूरिं सदा,-
हमेशा विद्वान् की सेवा करनी चाहिए।

तृतीया- रक्ष्यन्तेऽत्र हि सूरिणा समगुणाः-
विद्वान् के द्वारा ही सभी गुणों की रक्षा की जाती है।

चतुर्थी- नित्यं नमः सूरये-
विद्वान् को हमेशा नमस्कार है।

पञ्चमी- सूरेः सम्पठतां गुणान् सुपथदान्-
विद्वान् से सन्मार्गप्रद गुणों को पढ़ना (जानना) चाहिए।

षष्ठी- सूरेः समीपे वसेत्-
विद्वान् के समीप रहना चाहिए।

सप्तमी- सूरौ सन्त्यमला गुणाः सुपथदाः-
विद्वान् में सन्मार्गप्रद गुण होते हैं।

सम्बो.- सूरे! जनान् शिक्षय-
हे विद्वान्! लोगों को शिक्षित करो।

## "इ" पतिः (स्वामी)

सर्वेषां पतिरेक एव भुवि तं ध्यायन्ति सर्वे पतिम्,
पत्या येन च सृज्यते जगदिदं पत्ये हि तस्मै नमः।
तस्मात् पत्युरजायतामरगणोंऽशास्तस्य पत्युः समे,
तस्मिन्नेव पतौ स्थितं जगदिदं नूनं पते पाहि नः।।७।।

**प्रथमा-** सर्वेषां पतिरेक एव भुवि-
संसार में सबका स्वामी एक ही है।

**द्वितीया-** तं, ध्यायन्ति सर्वे पतिम्-
उस स्वामी का सबलोग ध्यान करते हैं।

**तृतीया-** पत्या येन च सृज्यते जगदिदम्-
जिस स्वामी के द्वारा इस जगत् की सृष्टि की जाती है।

**चतुर्थी-** पत्ये हि तस्मै नमः-
उस स्वामी को नमस्कार है।

**पञ्चमी-** तस्मात् पत्युरजायतामरगणः-
उसी स्वामी से देवता उत्पन्न हुए।

**षष्ठी-** अंशाः तस्य पत्युः समे-
सबलोग उसी स्वामी के अंश हैं।

**सप्तमी-** तस्मिन् एव पतौ स्थितं जगत् इदम्-
उसी स्वामी में यह सम्पूर्ण जगत् स्थित है।

**सम्बो.-** नूनं पते पाहि नः-
हे स्वामिन्! निश्चित ही हम लोगों की रक्षा करो।

# ''इ'' सखि-शब्दः (मित्र)

लोकेऽस्मिन् स्वसखा सदैव सुखदो नूनं सखायं स्मरेत्,
सख्या नास्ति समोऽत्र कश्चन जनः सख्ये नहीर्ष्या क्वचित्।
सख्युर्नैव भयं कदापि भवति श्लाघ्याश्च सख्युर्गुणाः,
सख्यौ कोऽपि न दोष, आव्रजति स श्रुत्वा सखे! सर्वदा।।८।।

प्रथमा- लोके अस्मिन् स्वसखा सदा एव सुखदः-
लोक में अपना मित्र सदा सुख देने वाला होता है।

द्वितीया- नूनं सखायं स्मरेत्-
मित्र का स्मरण अवश्य करना चाहिए।

तृतीया- सख्या नास्ति समः अत्र कश्चन जनः-
मित्र के समान दूसरा कोई मनुष्य नहीं है यहाँ।

चतुर्थी- सख्ये नहि ईर्ष्या क्वचित्-
मित्र के लिए किसी प्रकार की ईर्ष्या नहीं होती।

पञ्चमी- सख्युः नैव (न एव) भयं कदापि भवति-
मित्र से कभी भी भय नहीं होता है।

षष्ठी- श्लाघ्याः च सख्युः गुणाः-
मित्र के गुण प्रशंसनीय हैं।

सप्तमी- सख्यौ कोऽपि (कः अपि) न दोषः-
मित्र में कोई दोष नहीं है,

सम्बो.- आव्रजति स श्रुत्वा सखे! सर्वदा-
"हे सखे!" ऐसा सुनकर तत्क्षण उपस्थित हो जाता है।

## "ई" सुधीः (विद्वान्)

पूज्योऽस्तीह सुधीः सदा च सुधियं सेवेत तं सर्वदा,
शिक्ष्यन्ते सुधिया जना हि सुधिये विद्या च या रोचते।
तां विद्यां सुधियः पठेच्च सुधियो गत्वा गृहं वै ध्रुवं,
श्रद्धाभक्तिसुराशिरस्ति सुधियि ध्यानं सुधीर्दीयताम्।।१।।

प्रथमा- पूज्यः अस्ति इह सुधीः सदा च-
विद्वान् यहाँ सदा पूजनीय है।

द्वितीया- सुधियं सेवेत तं सर्वदा-
(अतः) उस विद्वान् की सेवा सर्वदा करनी चाहिए।

तृतीया- शिक्ष्यन्ते सुधिया जनाः हि-
विद्वान् के द्वारा ही लोग शिक्षित किये जाते हैं।

चतुर्थी- सुधिये विद्या च या रोचते-
सुधी को जो विद्या अच्छी लगे,

पञ्चमी- तां विद्यां सुधियः पठेच्च (पठेत् च)-
उस विद्या को सुधी से-

षष्ठी- सुधियो (सुधियः) गत्वा गृहं वै ध्रुवम्-
सुधी के घर जाकर अवश्य पढ़ लेना चाहिए।

सप्तमी- श्रद्धाभक्तिसुराशिरस्ति (-शिः अस्ति) सुधियि-
सुधी में श्रद्धा एवं भक्ति की राशि भरी पड़ी है।

सम्बो.- ध्यानं सुधीः दीयताम्-
हे सुधी! ध्यान दिया जाय।

## "ई" पपीः (सूर्य)

आकाशे सुतरामुदेति हि पपीरर्चन्तु सर्वे पपीम्,
पप्येदं किल काशितं समजगत् तस्मै च पप्ये नमः।
पप्यो विभ्यति कौ निशाचरगणाः पप्यः प्रकाशोऽखिलः,
सौम्याः सन्ति पपी गुणाश्च बहवस्त्वं भो पपीः पाहि नः।।१०।।

प्रथमा- आकाशे सुतराम् उदेति हि पपीः-
आकाश में सदा सूर्य उदित होते हैं।

द्वितीया- अर्चन्तु सर्वे पपीम्-
सब लोग सूर्य की अर्चना करें।

तृतीया- पप्येदं (पप्या इदं) किल काशितं समजगत्-
यह सम्पूर्ण जगत् सूर्य से ही प्रकाशित है।

चतुर्थी- तस्मै च पप्ये नमः-
उस सूर्य को नमस्कार है।

पञ्चमी- पप्यो (पप्यः) विभ्यति कौ निशाचरगणाः-
पृथ्वी पर निशाचरों का समूह सूर्य से डरता है।

षष्ठी- पप्यः प्रकाशोऽखिलः (-शः अखिलः)-
सूर्य का प्रकाश अखिल (असीमित) है।

सप्तमी- सौम्याः सन्ति पपी गुणाः च बहवः-
सूर्य में सौम्य गुण बहुत हैं।

सम्बो.- त्वं भो पपीः पाहि नः-
हे सूर्य! तुम हमलोगों की रक्षा करो।।

## "ई" प्रधीः (बुद्धिमान्)

सर्वं साधयति प्रधीः प्रतिभया प्रध्यं स्तुवन्ति प्रजाः,
प्रध्या शोभितमस्ति विश्वमखिलं प्रध्ये न दुःखं क्वचित्।
प्रध्यो दूरमवस्थितिर्न शुभदा प्रध्यो विधेया नतिः,
प्रध्यि प्रेम विधीयतां हि नितरां प्रज्ञां प्रदेहि प्रधीः।।११।।

प्रथमा- सर्वं साधयति प्रधीः प्रतिभया-
प्रधी (बुद्धिमान्) अपनी प्रतिभासे सब कुछ सिद्ध कर लेता है।

द्वितीया- प्रध्यं स्तुवन्ति प्रजाः-
लोग बुद्धिमान् की स्तुति (प्रशंसा) करते हैं।

तृतीया- प्रध्या शोभितमस्ति विश्वमखिलम्-
प्रधी से सम्पूर्ण विश्व शोभित है।

चतुर्थी- प्रध्ये नः दुःखं क्वचित्-
प्रधी के लिए कहीं भी दुःख नहीं है।

पञ्चमी- प्रध्यो दूरमवस्थितिर्न शुभदा-
प्रधी से दूर रहना ठीक नहीं है।

षष्ठी- प्रध्यो विधेया नतिः-
प्रधी को नमस्कार करना चाहिये।

सप्तमी- प्रध्यि प्रेम विधीयतां हि नितराम्-
प्रधी में हमेशा स्नेह (प्रेम) रखना चाहिये।

सम्बो.- प्रज्ञां प्रदेहि प्रधीः-
हे प्रधी! प्रज्ञा प्रदान करो।

## "उ" भानुः (सूर्य)

भानुः खे नितरामुदेति निखिले भानुं कृपालुं भजे,
व्याप्तं येन हि भानुनाऽखिल-जगत् तस्मै नमो भानवे।
भानोः सम्भवति प्रकाशजननं भानोर्वयं स्मः सुता,
भानौ सन्ति शुभा गुणा बहुविधा भानो सदा शं कुरु।।१२।।

प्रथमा- भानुः खे नितराम् उदेति निखिले-
निखिल गगन में हमेशा भानु का उदय होता है।

द्वितीया- भानुं कृपालुं भजे-
कृपा करने वाले भानु को भजता हूँ।

तृतीया- व्याप्तं येन हि भानुना अखिलजगत्-
अखिल (सम्पूर्ण) जगत् जिस भानु से व्याप्त है,

चतुर्थी- तस्मै नमः भानवे-
उस भानु को नमस्कार है।

पञ्चमी- भानोः सम्भवति प्रकाशजननम्-
भानु से ही प्रकाश की उत्पत्ति होती है।

षष्ठी- भानोः वयं स्मः सुताः-
हमलोग भानु की ही सन्तान (पुत्र) हैं।

सप्तमी- भानौ सन्ति शुभा गुणा बहुविधाः-
भानु में अनेक प्रकार के शुभ गुण हैं।

सम्बो.- भानो सदा शं कुरु-
हे भानो! सदा कल्याण करो।।

## "ऋ" दातृ - शब्दः (देनेवाला)

दाताऽस्तीश्वर एक एव भुवि दातारं श्रयन्ते जना,
दात्रा श्रीहरिणा जगद् विरचितं दात्रे च तस्मै नमः।
दातुर्नैव विभेति कश्चन जनो दातुश्च पुत्राः समे,
तस्मिन् दातरि सन्ति सुन्दरगुणा दातर्धनं देहि नः।।१३।।

प्रथमा- दाताऽस्तीश्वरः एकः एव भुवि-
भूलोक में ईश्वर ही एक दाता है।

द्वितीया- दातारं श्रयन्ते जनाः-
लोग दाता का ही आश्रय लेते हैं।

तृतीया- दात्रा श्रीहरिणा जगत् विरचितम्-
दाता श्रीहरि ने जगत् की रचना की है।

चतुर्थी- दात्रे च तस्मै नमः-
उस दाता को नमस्कार है।

पञ्चमी- दातुः नैव (न एव) विभेति कश्चन जनः-
कोई भी व्यक्ति दाता से नहीं डरता।

षष्ठी- दातुश्च पुत्राः समे-
सब लोग दाता (ईश्वर) के पुत्र हैं।

सप्तमी- तस्मिन् दातरि सन्ति सुन्दरगुणाः-
उस दाता में सुन्दर गुण हैं।

सम्बो.- दातः धनं देहि नः-
हे दाता! हमलोगों को धन दो।

# "ऋ" पितृ-शब्दः (पिता)

संसारस्य पिता हरिश्च पितरं प्रेम्णा सुवन्दे बुधम्,
पित्रा साकमहर्निशन्निवसतु द्रुह्यान्न पित्रे क्वचित्।
पृथ्व्यां नास्ति पितुर्विना किमपि शं पाल्येत चाज्ञा पितुः,
स्नेहाः सन्ति सुतान् प्रतीह पितरि त्वं भो पितः पालय।।१४।।

प्रथमा- संसारस्य पिता हरिः च-
संसार का पिता हरि है।

द्वितीया- पितरं प्रेम्णा सुवन्दे बुधम्-
प्रेम से बुध (विद्वान्) पिता की वन्दना करता हूँ।

तृतीया- पित्रा साकम् अहर्निशं निवसतु-
पिता के साथ रात-दिन रहना चाहिए।

चतुर्थी- द्रुह्यात् न पित्रे क्वचित्-
कभी भी पिता से द्रोह नहीं करना चाहिए।

पञ्चमी- पृथ्व्यां नास्ति पितुः विना किमपि शम्-
पृथ्वी पर पिता के बिना किसी प्रकार का कल्याण नहीं है।

षष्ठी- पाल्येत च आज्ञा पितुः-
पिता की आज्ञा का पालन करना चाहिए।

सप्तमी- स्नेहाः सन्ति सुतान् प्रति इह पितरि-
पिता में पुत्रों के प्रति स्नेह हैं।

सम्बो.- त्वं भो पितः पालय-
हे पिता! तुम पालन करो।

## "ऐ" रै-शब्दः (धन)

लोके रा भवति श्रमेण निखिले रायं श्रमेणार्जयेद्,
राया नास्ति विना सुजीवनमहो राये च लक्ष्मीं भजेत्।
रायो धर्मभवस्ततः सुखभवो रायः शुभोऽल्पव्ययो,
वृद्धी रायि यथा तथैव सततं श्राम्येद् गृहे रा वसेः।।१५।।

प्रथमा- लोके रा (राः) भवति श्रमेण निखिले-
निखिल लोक में श्रम से ही धन होता है।

द्वितीया- रायं श्रमेण अर्जयेत्-
परिश्रम से धन का अर्जन करना चाहिए।

तृतीया- राया नास्ति विना सुजीवनम् अहो-
धन के बिना सुखमय जीवन नहीं है।

चतुर्थी- राये च लक्ष्मीं भजेत्-
धन के लिए लक्ष्मी की सेवा करें।

पञ्चमी- रायः धर्मभवः ततः सुखभवः-
धन से धर्म और धर्म से सुख होता है।

षष्ठी- रायः शुभः अल्पव्ययः-
धन का अल्पव्यय शुभ (अच्छा होता) है।

सप्तमी- वृद्धी (वृद्धिः) रायि यथा तथा एव सततं श्राम्येद्-
धन में वृद्धि जैसे हो वैसा ही श्रम सदा करना चाहिए।

सम्बो.- गृहे रा (राः) वसेः-
हे धन! घर में निवास करो।

## ''ओ'' गो-शब्दः (बैल या गाय)

भ्रात्रा तुल्य इहास्ति गौः खलु नृणां नूनं च गां पालयेत्,
लाभाः सन्ति गवा सदा बहुविधाः कुर्याद् गवे पूजनम्।
गोर्नैवेह विभेतु कश्चन जनः सेवा विधेया हि गोः,
आरूढो गवि शङ्करः पशुपतिः भो गौः सदा वर्द्धय।।१६।।

**प्रथमा-** भ्रात्रा तुल्य इह अस्ति गौः खलु नृणाम्-
मनुष्यों के लिए यहाँ गो (बैल) भ्रातृतुल्य है।

**द्वितीया-** नूनं च गां पालयेत्-
गो का पालन अवश्य करना चाहिए।

**तृतीया-** लाभाः सन्ति गवा सदा बहुविधाः-
गो से हमेशा अनेक प्रकार के लाभ होते हैं।

**चतुर्थी-** कुर्याद् गवे पूजनम्-
गो का (के लिए) पूजन करना चाहिए।

**पञ्चमी-** गोः न एव इह विभेतु कश्चन जनः-
गो से कोई व्यक्ति भयभीत न हो।

**षष्ठी-** सेवा विधेया हि गोः-
गो की सेवा करनी चाहिए।

**सप्तमी-** आरूढः गवि शङ्करः पशुपतिः-
पशुपति शंकर गो (बैल) पर आरूढ़ हैं।

**सम्बो.-** भो गौः सदा वर्द्धय-
हे गो! सदा वृद्धि करो।।

## ''औ'' ग्लौ-शब्दः (चन्द्रमा)

ग्लौ रात्रौ समुदेति खे च निखिले ग्लावं भजेत् सर्वदा,
ग्लावैवात्र खलु प्रसीदति मनो ग्लावे नमोऽहर्निशम्।
ग्लावश्चैव निशि प्रकाशसुभवो ग्लावो वरा कौमुदी,
ग्लावि श्लाघ्यशुभा मनोहरगुणा ग्लौः पार्थिवान् रञ्जय।।१७।।

**प्रथमा-** ग्लौ (ग्लौः) रात्रौ समुदेति खे च निखिले-
अखिल गगन में रात में चन्द्रमा निकलता है।

**द्वितीया-** ग्लावं भजेत् सर्वदा-
चन्द्रमा को हमेशा भजना चाहिए।

**तृतीया-** ग्लावैवात्र (ग्लावा एव अत्र) खलु प्रसीदति मनः-
चन्द्रमा से ही यहाँ मन प्रसन्न होता है।

**चतुर्थी-** ग्लावे नमः अहर्निशम्-
चन्द्रमा को रात-दिन नमस्कार है।

**पञ्चमी-** ग्लावः च एव निशि प्रकाशसुभवः-
चन्द्रमा से ही रात में प्रकाश होता है।

**षष्ठी-** ग्लावः वरा कौमुदी-
चन्द्रमा की कौमुदी (चाँदनी) श्रेष्ठ है।

**सप्तमी-** ग्लावि श्लाघ्यशुभाः मनोहरगुणाः-
चन्द्रमा में प्रशंसनीय, शुभ एवं मन को हर लेने वाले गुण विद्यमान हैं।

**सम्बो.-** ग्लौः पार्थिवान् रञ्जय-
हे चन्द्र! पृथ्वी पर रहने वालों को प्रसन्न करो।

# अजन्तस्त्रीलिङ्गप्रकरणम्

## "आ" विद्या

या विद्याऽस्ति सदा शुभा सुगुणदा विद्यां च तां निर्दिशेद्,
मुक्तिः स्याच्च सुविद्यया ददतु विद्यायै स्वकालं शुभम्।
विद्याया भवति प्रभा झटिति विद्यायाश्च भक्ताः समे,
विद्यायां हि रता भवन्तु मनसा विद्ये वसेर्नो हृदि।।१८।।

प्रथमा- या विद्या अस्ति सदा शुभा सुगुणदा-
जो विद्या सदा शुभ और सद्गुणों को देने वाली है,

द्वितीया- विद्यां च तां निर्दिशेत्-
उस विद्या का निर्देश करना चाहिए।

तृतीया- मुक्ति स्यात् च सुविद्यया-
सुविद्या से (ही) मुक्ति होती है।

चतुर्थी- ददतु विद्यायै स्वकालं शुभम्-
विद्या के लिए अपने शुभ समय को देना (लगाना) चाहिए।

पञ्चमी- विद्यायाः भवति प्रभा झटिति-
विद्या से अतिशीघ्र प्रभा (प्रकाश) होती है।

षष्ठी- विद्यायाः च भक्ता समे-
विद्या के समस्त उपासक भक्त!

सप्तमी- विद्यायां हि रता भवन्तु मनसा-
मन से विद्या (अध्ययन) में संलग्न हो जावें।

सम्बो.- विद्ये वसेनों हृदि-
हे विद्ये! हमारे हृदय में निवास करो।

# अम्बा - शब्दः (माँ)

अम्बा पाति सुतान् समान् करुणया शून्या धराऽम्बां विना,
संसारो रचितोऽम्बया किल ययाऽम्बायै च तस्यै नमः।
अम्बाया न पृथग् भवेद् भुवि सदाम्बायाः समीपे वसेत्,
अम्बायां गुणराशिरस्ति शुभदो ह्यम्ब प्रसीदेः सदा।।१९।।

प्रथमा- अम्बा पाति सुतान् समान् करुणया-
अम्बा (माँ) करुणा से सभी पुत्रों की रक्षा करती हैं।

द्वितीया- शून्या धराऽम्बां विना-
अम्बा (माँ) के बिना धरती शून्य है।

तृतीया- संसारो रचितोऽम्बया किल यया-
जिस अम्बा के द्वारा संसार की रचना हुई है।

चतुर्थी- अम्बायै च तस्यै नमः-
उस अम्बा को नमस्कार है।

पञ्चमी- अम्बाया न पृथग् भवेद् भुवि-
धरती पर अम्बा (माँ) से अलग कभी नहीं होना चाहिये।

षष्ठी- सदाम्बायाः समीपे वसेत्-
हमेशा अम्बा के समीप रहना चाहिये।

सप्तमी- अम्बायां गुणराशिरस्ति शुभदो हि-
अम्बा में शुभद गुणराशि है।

सम्बो.- अम्ब प्रसीदेः सदा-
हे अम्ब (माँ)! हमेशा प्रसन्न रहो।

## "इ" बुद्धिः (बुद्धि)

बुद्धिः सर्वबलप्रदाऽस्त्यखिलकौ शंसन्ति बुद्धिं बुधा,
बुद्ध्या नास्ति विना बलं नहि धनं सेवेत बुद्ध्यै गुरुम्।
बुद्ध्या एव पलायते रिपुदलं बुद्ध्या महत्त्वं बहु,
बुद्ध्यामेव बलादिकञ्च सकलं बुद्धे वसेर्मस्तके।।२०।।

प्रथमा- बुद्धिः सर्वबलप्रदा अस्ति अखिल-कौ-
अखिल भूमि पर बुद्धि सभी बलों की दात्री है।

द्वितीया- शंसन्ति बुद्धिं बुधाः-
बुधजन बुद्धि की प्रशंसा करते हैं।

तृतीया- बुद्ध्या नास्ति विना बलं नहि धनम्-
बुद्धि के विना न बल है न धन ही।

चतुर्थी- सेवेत बुद्ध्यै गुरुम्-
बुद्धि के लिए गुरु की सेवा करनी चाहिए।

पञ्चमी- बुद्ध्याः एव पलायते रिपुदलम्-
बुद्धि से ही रिपुओं का दल दूर भाग जाता है।

षष्ठी- बुद्ध्याः महत्त्वं बहु-
बुद्धि का बड़ा महत्त्व है।

सप्तमी- बुद्ध्याम् एव बलादिकं च सकलम्-
बल आदि सब कुछ बुद्धि में ही है।

सम्बो.- बुद्धे वसेः मस्तके-
हे बुद्धे! तुम मस्तिष्क में निवास करो।

# "ई" गौरी (गौरी)

या गौरी जनतोषिणी शुभकरी गौरीं भजे तामहं,
गौर्य्या साकमवस्थितिः पशुपते; गौर्य्यै नमस्सादरम्।
गौर्य्याः सम्भवतीह मोदजननं गौर्या वयं स्मः सुताः,
गौर्यां शक्तमहेश्वरो भयहरोऽस्मान् गौरि रक्षानिशम्।।२१।।

प्रथमा- या गौरी जनतोषिणी शुभकरी-
जो जनों को सन्तुष्ट एवं मंगल करने वाली गौरी,

द्वितीया- गौरीं भजे तामहम्-
उस गौरी का भजन मैं करता हूँ।

तृतीया- गौर्य्या साकम् अवस्थिति; पशुपते:-
गौरी के साथ ही पशुपति की अवस्थिति (निवास) है।

चतुर्थी- गौर्य्यै नम; सादरम्-
गौरी को आदर पूर्वक नमस्कार है।

पञ्चमी- गौर्याः सम्भवति इह मोदजननम्-
गौरी से ही यहाँ प्रसन्नता (मंगल) उत्पन्न होती है।

षष्ठी- गौर्याः वयं स्म: सुता:-
हमलोग गौरी के पुत्र हैं।

सप्तमी- गौर्यां शक्तमहेश्वर भयहर:-
गौरी में आसक्त महेश्वर भय को हरने वाले हैं।

सम्बो.- अस्मान् गौरि रक्ष अनिशम्-
हे गौरि! अहर्निश हमलोगों की रक्षा करो।

## "ई" लक्ष्मीः (लक्ष्मी)

लक्ष्मीः श्रेष्ठतमाऽस्ति सिद्धिशुभदा लक्ष्मीं सदोपास्महे,
श्रीलक्ष्म्यैव सुहर्षिताश्च मनुजा लक्ष्म्यै न कोऽपीर्ष्यते।
लक्ष्म्या दूरमवस्थितिस्त्वशुभदा लक्ष्म्या गुणो गीयतां,
लक्ष्म्यामेव हरी रतोऽस्ति नितरां भो लक्ष्मि तुभ्यं नतिः।।२२।।

प्रथमा- लक्ष्मीः श्रेष्ठतमा अस्ति सिद्धिशुभदा-
लक्ष्मी श्रेष्ठतम, सिद्धियों एवं शुभों को देने वाली है।

द्वितीया- लक्ष्मीं सदा उपास्महे-
लक्ष्मी की उपासना हमेशा करते हैं।

तृतीया- श्रीलक्ष्म्या एव सुहर्षिता; च मनुजाः-
श्रीलक्ष्मी के द्वारा ही मनुष्य प्रसन्न रहते हैं।

चतुर्थी- लक्ष्म्यै न कोऽपि (कः अपि) ईर्ष्यते-
लक्ष्मी से कोई ईर्ष्या नहीं करता है।

पञ्चमी- लक्ष्म्याः दूरम् अवस्थितिः तु अशुभदा-
लक्ष्मी से दूर रहना शुभप्रद नहीं है।

षष्ठी- लक्ष्म्याः गुणः गीयताम्-
लक्ष्मी का गुणगान करना चाहिए।

सप्तमी- लक्ष्म्याम् एव हरिः रतः अस्ति नितराम्-
सदा हरि लक्ष्मी में ही रत रहते हैं।

सम्बो.- भो (भोः) लक्ष्मि तुभ्यं नतिः-
हे लक्ष्मि! तुमको नमस्कार है।

## ''ई'' श्रीः (लक्ष्मी)

श्रीर्वन्द्या मनुजैश्च तैः सुमनसेच्छेयुः सदा ये श्रियं,
लोकेऽस्मिन्न विना श्रिया भवति शं मात्रे श्रिये स्यान्नतिः।
सिद्ध्यृद्धिप्रभवः श्रियोऽखिलजनैः कार्यं श्रियः पूजनं,
वर्तन्ते सकलाः श्रियां च निधयः श्रि त्वं धनं देहि नः।।२३।।

**प्रथमा-** श्रीःवन्द्या मनुजैः च तैः सुमनसा-
उन मनुष्यों द्वारा मन से श्री (लक्ष्मी) वन्दनीय हैं,

**द्वितीया-** इच्छेयुः सदा ये श्रियम्-
जो सदा श्री को चाहें। (चाहते हों)

**तृतीया-** लोके अस्मिन् न विना श्रिया भवति शम्-
इस लोक में श्री (लक्ष्मी) के विना कल्याण नहीं है।

**चतुर्थी-** मात्रे श्रिये स्यात् नतिः-
माता श्री को नमस्कार है।

**पञ्चमी-** सिद्धि-ऋद्धिप्रभवः श्रियः-
श्री से ही ऋद्धि-सिद्धयों का आविर्भाव होता है।

**षष्ठी-** अखिलजनैः कार्यं श्रियः पूजनम्-
सभी लोगों को श्री का पूजन करना चाहिए।

**सप्तमी-** वर्तन्ते सकलाः श्रियां च निधयः-
सभी निधियाँ श्री में अवस्थित हैं।

**सम्बो.-** श्रि त्वं धनं देहि नः-
हे श्रि! तुम हमलोगों को धन दो।

## "ई" स्त्री - शब्दः (स्त्री)

स्त्री लक्ष्मीः सदनस्य याऽस्ति सुभगा सम्मानयेत्तां स्त्रियम्,
भूष्यन्ते पुरुषाः स्त्रिया विमलया श्रेयः स्त्रियै कल्प्यताम्।
सौख्यं नास्ति विना स्त्रियास्त्रिभुवने कार्यं स्त्रिया रक्षणम्,
तुष्टायां सदने स्त्रियां समसुखं स्त्रि त्वं सदा नन्द्यताम्।।२४।।

प्रथमा- स्त्री लक्ष्मीः सदनस्य याऽस्ति सुभगा-
जो घर की लक्ष्मीरूप सौभाग्यवती स्त्री है,

द्वितीया- सम्मानयेत्तां स्त्रियम्-
उस स्त्री को सम्मानित करना चाहिये।

तृतीया- भूष्यन्ते पुरुषाः स्त्रिया विमलया-
अच्छी स्त्री से पुरुष विभूषित होते हैं।

चतुर्थी- श्रेयः स्त्रियै कल्प्यताम्-
स्त्री के लिए श्रेय (कल्याण) की कल्पना करनी चाहिये।

पञ्चमी- सौख्यं नास्ति विना स्त्रियास्त्रिभुवने-
तीनों लोकों में स्त्री के विना सुख नहीं है।

षष्ठी- कार्यं स्त्रिया रक्षणम्-
स्त्री की रक्षा करनी चाहिये।

सप्तमी- तुष्टायां सदने स्त्रियां समसुखम्-
घर में स्त्री के सन्तुष्ट रहने से सारे सुखों की प्राप्ति हो जाती है। (स्त्री के सन्तुष्ट रहने पर सब सुख है।

सम्बो.- स्त्रि! त्वं सदा नन्द्यताम्-
हे स्त्री! तुम सदा आनन्द से (प्रसन्न) रहो।

# "उ" धेनुः (गाय)

धेनुस्त्वस्ति सुपालिकाऽस्य जगतो धेनुं नरः पालयेद्,
धेन्वा नो सदृशोऽस्ति कश्चन पशुर्धेन्वे प्रणामः सदा।
धेन्वा लभ्यमिदं घृतं दधि पयो धेन्वाः शुभं गोमयं,
धेन्वां वै निवसन्ति निर्जरगणा धेनो प्रसीदानिशम्।।२५।।

प्रथमा- धेनुः तु अस्ति सुपालिका अस्य जगतः-
धेनु तो इस लोक की पालनकर्त्री ही है।

द्वितीया- धेनुं नरः पालयेद्-
मनुष्य को धेनु (गो) का पालन करना चाहिए।

तृतीया- धेन्वा नो सदृशः अस्ति कश्चन पशुः-
धेनु के सदृश अन्य कोई पशु नहीं है।

चतुर्थी- धेन्वे प्रमाणः सदा-
सदा धेनु को प्रणाम है।

पञ्चमी- धेन्वाः लभ्यम् इदं घृतं दधि पयः-
यह घी दधि या दूध धेनु से ही लभ्य है।

षष्ठी- धेन्वाः शुभं गोमयम्-
धेनु का गोमय शुभ है।

सप्तमी- धेन्वां वै निवसन्ति निर्जरगणाः-
धेनु में देववृन्द निवास करते हैं।

सम्बो.- धेनो प्रसीद अनिशम्-
हे धेनो! अहर्निश प्रसन्न रहो।

## "ऊ" वधूशब्दः (बहू)

या लोकेऽस्ति वधूः स्वभावसरला ना श्लाघते तां वधूम्,
वध्वा भूषितमस्ति सर्वसदनं वध्वै ददात्वादरम्।
वध्वा नास्ति विना सुखं निजगृहे वध्वा स्थितिः सौख्यदा,
वध्वामस्तु रतिः सदैव विमला लोके वधु भ्राज्यताम्।।२६।।

प्रथमा- या लोकेऽस्ति वधूः स्वभावसरला-
लोक में जो बहू स्वभाव से सरल है।

द्वितीया- ना श्लाघते तां वधूम्-
मनुष्य उस वधू की प्रशंसा करता है।

तृतीया- वध्वा भूषितमस्ति सर्वसदनम्-
सम्पूर्ण सदन (गृह) वधू से विभूषित है।

चतुर्थी- वध्वै ददात्वादरम्-
वधू के लिए आदर देना चाहिए।

पञ्चमी- वध्वा नास्ति विना सुखं निजगृहे-
अपने घर में वधू के बिना सुख नहीं है।

षष्ठी- वध्वा स्थितिः सौख्यदा-
वधू की स्थिति सुखद होती है।

सप्तमी- वध्वामस्तु रतिः सदैव विमला-
वधू मे हमेशा विमल अनुराग हो।

सम्बो.- लोके वधु भ्राज्यताम्-
हे वधु! लोक में शोभित होवो।

## "ओ" द्यो (स्वर्ग या आकाश)

द्यौर्लोकेषु महत्तमा च सुखदा द्यां यान्ति सन्मानवा,
येषां नास्ति समं द्यवा किमपि ते कुर्वन्ति पुण्यं द्यवे।
राजा द्योरमरस्त्रिशंकुरपतद् योग्यास्तु न द्योः समे,
सर्वैरुष्यत एव तद्द्यवि सुरैः द्यौस्त्वं जनानुद्धर।।२७।।

प्रथमा- द्यौः लोकेषु महत्तमा च सुखदा-
स्वर्ग लोकों में अत्यन्त महत्त्वपूर्ण और सुखद है।

द्वितीया- द्यां यान्ति सन्मानवाः-
सज्जन लोग स्वर्ग जाते हैं।

तृतीया- येषां नास्ति समं द्यवा किमपि-
जिन्हें स्वर्ग के समान दूसरा कुछ नहीं है।

चतुर्थी- ते कुर्वन्ति पुण्यं द्यवे-
वे स्वर्ग के लिए पुण्य करते हैं।

पञ्चमी- राजा द्योः अमरः त्रिशंकुः अपतत्-
अमर राजा त्रिशंकु स्वर्ग से च्युत हो गये।

षष्ठी- योग्याः तु न द्योः समे-
स्वर्ग के योग्य सब नहीं होते।

सप्तमी- सर्वैः उष्यते एव तद्द्यवि सुरैः-
सभी देवता उस स्वर्ग में रहते हैं।

सम्बो.- द्यौः त्वं जनानुद्धर-
हे स्वर्ग! तुम लोगों का उद्धार करो।

## "औ" नौः (नाव)

या नौरस्ति सरिच्चरी भ्रमति तामारुह्य नावं नरो,
नावोत्तीर्य नदीं व्रजन्ति मनुजा नावे सुरक्षेष्यते।
नावो नैव बहिः क्षिपेदवयवान् नावो गृहं वै जलं,
यायान्नावि न वारि हानिदमहो नौर्नॄन्नदीन्तारय।।२८।।

प्रथमा- या नौ अस्ति सरिच्चरी-
जो नाव नदी में चलती है

द्वितीया- भ्रमति ताम् आरुह्य नावं नरः-
उस नाव पर चढ़कर नर भ्रमण करता है।

तृतीया- नावा उत्तीर्य नदीं व्रजन्ति मनुजाः-
नाव से नदी पार करके लोग जाते हैं।

चतुर्थी- नावे सुरक्षा इष्यते-
नाव के लिए सुरक्षा चाहिए।

पञ्चमी- नावः न एव बहिः क्षिपेत् अवयवान्-
अवयवों (अंगों) को नाव से बाहर नहीं निकालना चाहिए।

षष्ठी- नावः गृहं वै जलम्-
नाव का घर जल है।

सप्तमी- यायात् नावि न वारि हानिदम्-
नाव में हानिकारक जल का प्रवेश नहीं होना चाहिए।

सम्बो.- अहो! नौः नॄन् नदीं तारय-
हे नाव! नरों को नदीपार करो।

# अजन्तनपुंसकलिङ्गम्

## "अ" ज्ञानम् (ज्ञान)

ज्ञानं श्रेष्ठतमं सुवस्तु भुवने ज्ञानं च कुर्युः सदा,
ज्ञानेनैव महीयते मनुसुतो ज्ञानाय कुर्याच्छ्रमम्।
ज्ञानान्नैव विशिष्यते किमपि कौ ज्ञानस्य कार्याऽर्चना,
ज्ञाने भक्तिसमन्विते हरिकृपा हे ज्ञान काशं कुरु।।२१।।

प्रथमा- ज्ञानं श्रेष्ठतमं सुवस्तु भुवने-
भुवन में ज्ञान सर्वश्रेष्ठ वस्तु है।

द्वितीया- ज्ञानं च कुर्युः सदा-
सदा ज्ञानार्जन करना चाहिए।

तृतीया- ज्ञानेन एव महीयते मनुसुतः-
मनुष्य ज्ञान से ही पूजित (पूजनीय) होता है।

चतुर्थी- ज्ञानाय कुर्यात् श्रमम्-
ज्ञान के लिए परिश्रम करना चाहिए।

पञ्चमी- ज्ञानात् न एव विशिष्यते किम् अपि कौ-
ज्ञान से श्रेष्ठ पृथ्वी पर दूसरा कुछ है ही नहीं।

षष्ठी- ज्ञानस्य कार्या अर्चना-
ज्ञान का अर्चन करना चाहिए।

सप्तमी- ज्ञाने भक्तिसमन्विते हरिकृपा-
ज्ञान के भक्ति युक्त होने पर हरिकृपा प्राप्त होती है।

सम्बो.- हे ज्ञान काशं कुरु-
हे ज्ञान! प्रकाश करो।

